# श्रीराघवेन्द्रस्तोत्रं

श्रीपूर्णबोधगुरुतीर्थपयोब्धिपारा
कामारिमाक्षविषमाक्ष शिरः स्पृशन्ति ।
पूर्वोत्तरामित तरङ्ग चरत्सुहंसा
देवालिसेवित पराङ्घ्रि पयोजलग्ना ॥ १ ॥

जीवेशभेदगुणपूर्तिजगत्सुसत्त्व
नीचोच्चभावमुखनक्रगणैः समेता ॥
दुर्वाद्यजापतिगिलैर्गुरुराघवेन्द्र-
वाग्देवतासरिदमुं विमलीकरोतु ॥ २ ॥

श्रीराघवेन्द्रः सकलप्रदाता
स्वपादकञ्जद्वयभक्तिमद्भ्यः ।
अघाद्रिसम्भेदनदृष्टिवज्रः
क्षमासुरेन्द्रोऽवतुमां सदाऽयम् ॥ ३ ॥

श्रीराघवेन्द्रोहरिपादकञ्ज

निषेवणाल्लब्धसमस्तसम्पत् ।
देवस्वभावो दिविजद्रुमोऽयं
इष्टप्रदो मे सततं स भूयात् ॥ ४ ॥

भव्यस्वरूपो भवदुःखतूल-
सङ्घाग्निचर्यः सुखधैर्यशाली ।
समस्तदुष्टग्रहनिग्रहेशो
दुरत्ययोपप्लवसिन्धुसेतुः ॥ ५ ॥

निरस्तदोषो निरवद्यवेषः
प्रत्यर्थिमूकत्त्वनिदानभाषः ।
विद्वत्परिज्ञेय महाविशेशः
वाग्वैखरीनिर्जितभव्यशेषः ॥ ६ ॥

सन्तानसम्पत्परिशुद्धभक्ति-
विज्ञानवाग्देहसुपाटवादीन् ।
दत्त्वा शरीरोत्थ समस्तदोषान्
हत्त्वा स नोऽव्याद्गुरुराघवेन्द्रः ॥ ७ ॥

यत्पादोदकसञ्चयः सुरनदीमुख्यापगासादिता
सङ्ख्याऽनुत्तमपुण्यसङ्घविलसत्प्रख्यातपुण्यावहः ।
दुस्तापत्रयनाशनो भुवि महा वन्ध्यासुपुत्रप्रदो
व्यङ्गस्वङ्गसमृद्धिदो ग्रहमहापापापहस्तं श्रये ॥ ८ ॥

यत्पादकञ्जरजसा परिभूषिताङ्गा
यत्पादपद्म मधुपायित मानसा ये ।
यत्पादपद्म परिकीर्तनजीर्णवाच
स्तद्दर्शनं दुरितकानन दावभूतम् ॥ ९ ॥

सर्वतन्त्रस्वतन्त्रोऽसौ श्रीमध्वमतवर्धनः ।
विजयीन्द्रकराब्जोत्था सुधीन्द्र वरपुत्रकः ॥ १० ॥

श्रीराघवेन्द्रो यतिराड् गुरुर्मे स्याद्भयावहः
ज्ञानभक्तिसुपुत्रायुः यशः श्रीपुण्यवर्धनः ॥ ११ ॥

प्रतिवादिजयस्वान्तभेदचिह्नादरो गुरुः ।
सर्वविद्याप्रवीणोऽन्यो राघवेन्द्रान्नविद्यते ॥ १२ ॥

अपरोक्षीकृतः श्रीशः समुपेक्षितभावजः ।
अपेक्षितप्रदाताऽन्यो राघवेन्द्रान्नविद्यते ॥ १३ ॥

दयादाक्षिण्यवैराग्य वाग्पाटवमुखाङ्कितः ।
शापानुग्रह शक्तोऽन्यो राघवेन्द्रान्नविद्यते ॥ १४ ॥

अज्ञानविस्मृतिभ्रान्ति संशयापस्मृतिक्षयाः ।
तन्द्राकम्पवचः कौण्ठ्यमुखा ये चेन्द्रियोद्भवाः ॥ १५ ॥

दोषास्ते नाशमायान्ति राघवेन्द्रप्रसादतः
ॐ श्री राघवेन्द्राय नमः इत्यष्टाक्षर मन्त्रतः
जपिताद्भावितान्नित्यं इष्टार्थाः स्युर्नसंशयः ॥ १६ ॥

हन्तु नः कायजान् दोषान् आत्मात्मीयसमुद्भवान्
सर्वानपि पुमर्थांश्च ददातु गुरुरात्मवित् ॥ १७ ॥

इति कालत्रये नित्यं प्रार्थनां यः करोति सः ।
इहामुत्राप्त सर्वेष्टो मोदते नात्र संशयः ॥ १८ ॥

अगम्य महिमा लोके राघवेन्द्रो महायशाः ।
श्रीमध्वमतदुग्धाब्धि चन्द्रोऽवतु सदाऽनघः ॥ १९॥

सर्वयात्रा फलावाप्त्यैर्यथाशक्तिप्रदक्षिणम् ।
करोमि तव सिद्धस्य वृन्दावनगतं जलम्
शिरसा धारयाम्यद्य सर्वतीर्थफलाप्तये ॥ २०॥

सर्वाभीष्टार्थसिद्ध्यर्थं नमस्कारं करोम्यहम् ।
तव सङ्कीर्तनं वेदशास्त्रार्थज्ञानसिद्धये ॥ २१॥

संसारेऽक्षयसागरे प्रकृतितोऽगाधे सदा दुस्तरे ।
सर्वावद्यजलग्रहैरनुपमैः कामादिभङ्गाकुले ।
नानाविभ्रमदुर्भ्रमेऽमितभयस्तोमादिफेनोत्कटे ।
दुःखोत्कृष्टविषे समुद्धर गुरो मां अज्ञरूपं सदा ॥ २२॥

राघवेन्द्रगुरुस्तोत्रं यः पठेद्भक्तिपूर्वकम् ।
तस्य कुष्ठादिरोगाणां निवृत्तिस्त्वरया भवेत्॥ २३॥

अन्धोऽपि दिव्यदृष्टिः स्यादेडमूकोऽपि वाग्पतिः ।

पूर्णायुः पूर्णसम्पत्तिः स्तोत्रस्यास्य जपाद्भवेत् ॥ २४ ॥

यः पिबेज्जलमेतेन स्तोत्रेणैवाभिमन्त्रितम् ।
तस्य कुक्षिगता दोषाः सर्वे नश्यन्ति तत्क्षणात् ॥ २५ ॥

यद्वृन्दावनमासाद्य पङ्गुः खञ्जोऽपि वा जनः ।
स्तोत्रेणानेन यः कुर्यात् प्रदक्षिण नमस्कृति ।
स जङ्घालो भवेदेव गुरुराजप्रसादतः ॥ २६ ॥

सोमसूर्यो परागे च पुष्यार्कादिसमागमे ।
योऽनुत्तममिदं स्तोत्रमष्टोत्तरशतं जपेत् ।
भूतप्रेतपिशाचादिपीडा तस्य न जायते ॥ २७ ॥

एतत् स्तोत्रं समुच्चार्य गुरोर्वृन्दावनान्तिके ।
दीपसंयोजनाज्ञानं पुत्रलाभो भवेद्ध्रुवम् ॥ २७ ॥

परवादिजयोदिव्य ज्ञानभक्त्यादिवर्धनम् ।
सर्वाभीष्टप्रवृद्धिः स्यान्नात्र कार्या विचारणा ॥ २८ ॥

राजचोरमहाव्याघ्रसर्पनक्रादिपीडनम् ।
न जायतेऽस्य स्तोत्रस्य प्रभावान्नात्र संशयः ॥ २९॥

यो भक्त्या गुरुराघवेन्द्र चरणद्वन्द्वं स्मरन् यः पठेत् ।
स्तोत्रं दिव्यमिदं सदा नहि भवेत् तस्यासुखं किञ्चन ।
किं त्विष्टार्थ समृद्धिरेव कमलानाथप्रसादोदयात् ।
कीर्तिर्दिग्विदिता विभूतिरतुला साक्षी हयास्योऽत्र हि ॥ ३० ॥

इति श्री राघवेन्द्रार्य गुरुराजप्रसादतः ।
कृतं स्तोत्रमिदं पुण्यं श्रीमद्भिर्ह्यप्पणाभिदैः ॥ ३१ ॥

पूज्याय राघवेन्द्राय सत्यधर्मरताय च ।
भजतां कल्पव्रूक्षाय नमतां कामधेनवे ॥ ३२ ॥

दुर्वादिध्वांतरवये वैष्णवेन्दीवरेन्दवे ।
श्री राघवेन्द्रगुरवे नमोऽत्यंतदयालवे ॥३३ ॥

अघम् द्रावयते यस्मात् व्ंकारो वांछितप्रदः ।
राघवेन्द्र यतिस्तस्माल्लोके ख्यातो भविष्यति ॥३५ ॥

आपदमौलिपर्यंतं गुरुणामाकृतिं स्मरेत् ।

तेन विघ्नाः प्रणश्यन्ति सिद्धयन्ति च् मनोरथाः ॥